बलात् २० हरिष्यतस्ततोह्यौचत्रयस्ताभ्यांबलात्पुनः ॥ शूद्रावेदंपठिष्यंतिब्राह्मणाःशूद्रकर्मिणः २१ क्षत्रियावैश्यकर्माणोवैश्याश्चशूद्रकर्मिणः ॥ प्र
तिग्रहंकरिष्यंतिचांडालस्यद्विजातयः २२ दरिद्राश्चभविष्यंतिहाहाभूताविचेतसः ॥ वदिष्यंतिचनमयागृहीतंधनमण्वपि ॥ २३ ॥ गृहीत्वापिचकृत्या
यथाचितारोधनंपरात् ॥ उत्कोचंचगृहीत्वैवनृथासाक्ष्यंब्रुवंतिच २४ मतांनिंदांकरिष्यंतिमैत्रींचासद्भिरेवच ॥ वृथामांसस्यभक्ष्यंचकरिष्यंतिद्विजातयः ॥
॥ २५ ॥ उच्छेदःसज्जनानांस्यादितरेषांचवैभवम् ॥ हित्वादेवान्भविष्यंतिजनाःसर्वेतथैंद्रिकान् २६ ॥ भूतप्रेतपिशाचानांभजनेसक्तमानसाः ॥
वेषान्नानाविधान्कृत्वाभक्षयिष्यंतिवाडवाः २७ केचिच्चक्षत्रियाभिक्षांचरिष्यंत्यकुलोचितां ॥ व्रतानिनियमांश्चापिनाचरिष्यंतिकर्हिचित् २८ वर्णसंकरका
रीणिकर्ताकर्माणिभूजनः ॥ पतिव्रताभ्रष्टव्रताभविष्यंतिकलौयुगे २९ म्लेच्छप्रायाःसर्वलोकाःपरद्रव्यापहारिणः ॥ निर्दयाःकुपथासक्ताःसर्वदासत्यवर्जिताः
३० धरित्रीसस्यहीनाचरसहीनामहीरुहाः ॥ पंचमेवाथषष्ठेवावर्षेकन्याप्रसूयते ३१ षोडशाब्दपरंचायुर्भविष्यतितदायुगे ॥ तीर्थानिगुप्तरूपाणिदेवतायतना
निच ३२ एवंपापेप्रवृद्धेतुधर्मेविश्वार्थमात्रकः ॥ भविष्यंतितदादेवाउपवासपरायणाः ३३स्वधास्वाहावषट्कारैर्वर्जिताभयविह्वलाः ॥ यास्यंतिशरणंदेवंगजा
ननमनामयं ३४ स्तुतिंनानाविधांतस्यकरिष्यंतिनतिंबहु ॥ प्रार्थयिष्यंतिदेवेशंसर्वविघ्नविनाशनं ३५ एवंसर्वैर्विचार्यासौआविर्भावंकरिष्यति ॥ गजाननःशू
र्पकर्णोधूम्रवर्णोपिनामतः ३६ नीलमश्वंसमारुह्यखड्गहस्तोरुषाज्वलन् ॥ कल्पयिष्यतिसेनांसनानारूपांनिजेच्छया ३७शस्त्राणिचमहास्त्राणिकल्पयिष्यत्यय
लतः ॥ वधिष्यतिमहाम्लेच्छान्सेनयास्वेनतेजसा ३८ म्लेच्छभूतांस्तथालोकान्वधिष्यतितदाखिलान् ॥ लीनान्कंदरदेशेषुब्राह्मणान्वन्यभक्षिणः ३९समाना
य्यप्रपूज्यैतान्भूमिंदास्यतिदेवराट् ॥ सत्कर्मकारिणःसर्वान्विधास्यतिचसज्जनान् ४० तदाधर्ममयंविश्वंभविष्यतिकृतेयुगे ॥ एवंकृत्वाधूम्रवर्णस्ततोंतर्द्धान
मेष्यति ४१ एवंचतुर्युगेव्यासविघ्नेशस्यमहात्मनः ॥ कथितानिचनामानिरूपाणिचतवानघ ४२ कर्माण्यद्भुतरूपाणितस्यचोक्तानिसर्वशः ॥ येषांश्रवणमा
त्रेणमुच्यंतेसर्वजंतवः ४३ अन्यान्यस्यापिरूपाणिनवक्तुंशक्तिरस्तिमे ॥ यत्रवेदाश्चचत्वारोविकुंठास्तत्रकाकथा ४४ ममवामद्वीधस्यापिमहिम्नस्तस्यवर्णने
अनुष्ठानायगच्छत्वंव्यवसायंकरोम्यहम् ४५ ॥ भृगुरुवाच ॥ एवंश्रुत्वासोमकांतव्यासोब्रह्ममुखात्कथाम् ॥ अतिप्रीतमनाःप्राहसर्वपापप्रणाशिनीम् ४६
मुनिरुवाच ॥ नतृप्तिमधिगच्छामिश्रुत्वाख्यानंमहाद्भुतम् ॥ धन्योस्म्यनुग्रहीतोस्मियत्त्वयासर्वसंशयाः ४७ दूरीकृताःकथासंगाद्गणेशचरिताश्रयात् ॥
अमृतस्येवमेतृप्तिःश्रुत्वाश्रुत्वानजायते ४८ अस्यश्रवणमात्रेणजन्मजन्मांतरार्जितम् ॥ वृजिनंनाशमायातिसर्वेकामाभवंतिच ४९ पूर्वपुण्यबलादस्यश्रव
णंजायतेनृणाम् ॥ नश्राव्यंदुर्जनायेदंपुराणंसर्वसिद्धिदम् ५० एवमुक्त्वानमस्कृत्यपरिक्रम्यस्वयंभुवम् ॥ गृहीत्वाज्ञांययौव्यासस्तपसेवनमुत्तमम् ५१ यत्र
कंदफलान्यासन्नुत्तमानिजलानिच ॥ नवायुःप्रबलोयत्रनातपोनाग्निरेवच ५२ तत्रापविष्टैकनिष्ठोजपन्नेकाक्षरंमनुम् ॥ व्यतीयुर्द्वादशाब्दानिमुनेस्तस्यतप